॥ दशावतारस्तोत्रम् ॥

नमोऽस्तु नारायणमन्दिराय नमोऽस्तु हारायणकन्धराय ।
नमोऽस्तु मत्स्याय लयाब्धिगाय नमोऽस्तु कूर्माय पयोब्धिगाय ।
नमो वराहाय धराधराय नमो नृसिंहाय परात्पराय ॥ २॥

नमोऽस्तु शक्राश्रय-वामनाय नमोऽस्तु विप्रोत्सव-भार्गवाय ।
नमोऽस्तु सीताहित-राघवाय नमोऽस्तु  पार्थस्तुत-यादवाय ॥ ३॥

नमोऽस्तु बुद्धाय विमोहकाय नमोऽस्तु ते कल्कि-पयोदिताय ।
नमोऽस्तु पूर्णामितसद्गुणाय समस्त-नाथाय हयाननाय ॥ ४॥

करस्थ-शङ्खोल्लस-दक्षमाला-प्रबोध-मुद्राभय-पुस्तकाय ।
नमोऽस्तु वक्त्रोद्गिर-दागमाय निरस्त हेयाय हयाननाय ॥ ५॥

रमासमाकार-चतुष्टयेन क्रमाच्चतुर्दिक्षु निषेविताय ।
नमोऽस्तु पार्श्वद्वयग-द्विरूपश्रियाभिषिक्ताय हयाननाय ॥ ६॥

किरीट-पट्टाङ्गद-हार-काञ्ची-सुरत्नपीतांबर-नूपुराद्यैः ।
विराजिताङ्गाय नमोऽस्तु तुभ्यं सुरैः परीताय हयाननाय ॥ ७॥

विदोष-कोटीन्दु-निभप्रभाय विशेषतो मध्व-मुनि-प्रियाय।
विमुक्तवन्द्याय नमोऽस्तु विश्वग्विधूत-विघ्नाय हयाननाय ॥८॥

नमोऽस्तु शिष्टेष्टद वादिराजकृताष्टकाभिष्टुत-चेष्टिताय ।
दसावतारै-स्त्रिदसार्थदाय निशेश-बिंबस्थ हयाननाय ॥ ९॥

नमोऽस्तु पारायणचर्चिताय नमोऽस्तु नारायण् तेऽर्चिताय ॥ १॥

॥ इति वादिराजपूज्यचरण-विरचितं दशावतारस्तोत्रं सम्पूर्णम् ॥

॥ दशावतारस्तोत्रम् २ ॥

यस्यालीयत शल्कसीम्नि जलधिः पृष्ठे जगन्मण्डलं
दंष्ट्रायां धरणी नखे दितिसुताधीशः पदे रोदसी ।
क्रोधे क्षत्रगणः शरेदशमुखः पाणौ प्रलम्बासुरो
ध्याने विश्वमसावधार्मिककुलं कस्मैचिदस्मै नमः ॥ १॥

पाठीनः कमठः किटिर्नरहरिः खर्वाकृतिर्भार्गवो
रामः कंसनिषूदनो दशबलः कल्की च नारायणः ।
युष्माकं स विभूतयेऽस्तु भगवान्सेतुर्भवाम्भोनिधौ
उत्ताराय युगे युगे युगपतिस्त्रैलोक्यनाथो हरिः ॥ २॥

वेदा येन समुद्धता वसुमती पृष्ठे धृताप्युद्धृता
दैत्येशो नखरैर्हतः फणिपतेर्लोकम् वलिःप्रापितः ।
क्ष्माऽक्षत्रा जगती दशास्यरहिता माता कृता रोहिणी
हिंसा दोषवती धराप्ययवना पायात्स नारायणः ॥ २॥

॥ इति दशावतारस्तोत्रम् ॥